अक्षत— अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः ।
मया निवेदिता भक्त्या गृहाण शिवशङ्कर ! ॥

पुष्प— पुष्पैर्नानाविधैर्दिव्यैः कुमुदैरथ चम्पकैः ।
पूजार्थं नीयते तुभ्यं पुष्पाणि प्रतिगृह्यताम् ॥

माला— माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।
मयाऽऽनीतानि पुष्पाणि गृहाण शिवशङ्कर ! ॥

बिल्वपत्र— काशीवास निवासी च कालभैरव-पूजनम् ।
प्रयागे माघमासे च बिल्वपत्रं शिवार्पणम् ॥
दर्शनं बिल्वपत्रस्य स्पर्शनं पापनाशनम् ।
अघोरपापसंहारं बिल्वपत्रं शिवार्पणम् ॥
अखण्डैर्बिल्वपत्रैश्च पूज्यते शिवशङ्कर ।
कोटिकन्या महादानं बिल्वपत्र शिवार्पणम् ॥

तुलसी— तुलसीं हेमरूपां च रत्नरूपां च मञ्जरी ।
सर्वमोक्षप्रदां तुभ्यमर्पयामि शिवशङ्कर ! ॥

दूर्वा— त्वं दुर्वेऽमृतजन्मासि वन्दितासि सुरैरपि ।
सौभाग्यं सन्ततिं देहि सर्वकार्यकरी भव ॥

शमीपत्र— शमी शमय मे पापं शमी लोहितकण्टका ।
धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी ॥

आभूषण— अलङ्कारान् महादिव्यान् नानारत्नविनिर्मितान् ।
गृहाण देवदेवेश प्रसीद शिवशङ्कर ! ॥



धूप— वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

दीप— आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृहाण देवेश ! त्रैलोक्य-तिमिरापहम् ॥

नैवेद्य— शर्कराघृतसंयुक्तं मधुरं स्वादु चोत्तमम् ।
उपहारसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥

मध्ये जलम्— एलोशिरलवङ्गादि-कर्पूर-परिवासितम् ।
प्राशनार्थं कृतं तोयं गृहाण शिवशङ्कर ! ॥

ऋतुफल— बीज-पूराम्र-पनस-खर्जूर-कदलीफलम् ।
नारिकेलफलं दिव्यं गृहाण शिवशङ्कर ॥

आचमन— कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् ।
आचम्यताम् उमानाथ मया दत्तं हि भक्तितः ॥

ताम्बूल— पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।
एलाचूर्णादिसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

अतर— चम्पकाशोक-बकुल-मालती-मोगरादिभिः ।
वासितं स्निग्धताहेतुं तैलं चारु प्रगृह्यताम् ॥

दक्षिणा— न्यूनातिरिक्तपूजायां सम्पूर्णफलहेतवे ।
दक्षिणां काञ्चनीं देव स्थापयामि तवाग्रतः ॥

आरती— कर्पूरगौरं करुणावतारं
संसारसारं भुजगेन्द्रहारम् ।

सदा वसन्तं हृदयारविन्दे
भवं भवानी-सहितं नमामि ॥

पुष्पाञ्जली—नानासुगन्धिपुष्पाणि यथाकालोद्भवानि च ।
पुष्पाञ्जलिर्मया दत्तो गृहाण शिवशङ्कर ॥

प्रार्थना—वन्दे देवमुमापतिं सुरगुरुं वन्दे जगत्कारणं
वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम् ।
वन्दे सूर्य-शशाङ्क-वह्निनयनं वन्दे मुकुन्दप्रियम्
वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शङ्करम् ॥

*

## चतुःषष्ठीपदवास्तुस्थापनम्

आचार्य को चाहिए कि अग्निवेदी से अग्निकोण में चौंसठ (६४) वास्तुपद वेदी पर ही वास्तुदेव के चौंसठ पद ( पैर ) निम्नाङ्कित हैं। मध्य का कोष्ठ छोड़कर चौंसठों स्थान में पूजन करे। उन चौंसठ पदों के नाम इस प्रकार हैं।

शिखिनं—समाह्वयन्तं शिखिनं महोज्ज्वलं
मेषाधिरूढं सुरराजवन्दितम् ।
त्रिशूलहस्तं वरदं महेशं
भजामि देवं स्वकुलाभिवृद्धये ॥ १ ॥

पर्जन्यं—एह्येहि जीमूत सुधाप्रविष्टे
चराऽचरैः सेवितधर्ममूर्ते ।



पवित्र देवेश गृहाण पूजां
ममाऽध्वरं पाहि भवन्नमस्ते ॥ २ ॥

जयन्तम्—एह्येहि देवेश जयन्तसूनो
शच्याः सदा सर्वसुरैकसेव्यः ।
पीठेऽत्र यज्ञेश गृहाण पूजां
शिवाय नः पाहि भवन्नमस्ते ॥ ३ ॥

कुलिशायुधम्—एह्येहि वृत्रघ्न गजाधिरूढं
सहस्रनेत्रत्रिदशैकराज
शचीपते शक्र सुरेश नित्यं
गृहाण पूजां भगवन्नमस्ते ॥ ४ ॥

सूर्यम्—समाह्वयन्तं द्विभुजं दिनेशं
सप्ताश्ववाहं द्युमणिं गणेशम् ।
सिन्दूरवर्णं प्रतिभावसम्भवं
भजामि सूर्यं स्वकुलाभिवृद्धये ॥ ५ ॥

सत्यम्—एह्येहि सत्येश महामहेश
दुष्यन्तकृत् स्वच्छ सुधर्ममूर्ते ।
पीठेऽत्र देवेश गृहाण पूजां
ममाऽध्वरं पाहि भवन्नमस्ते ॥ ६ ॥

भृशम्—समाह्वयन्तं द्विभुजं भृशं हि
नीलोत्पलाभास-विशालनेत्रम् ।

नीलाद्रिवर्णं प्रतिभावभासं
भजामि देवं कुलवृद्धिहेतोः ॥ ७ ॥

आकाशम्—समाह्वयन्तं गगनं दिवौकसा-
निवासभूतं सुविनिर्मलं च ।
आरक्तहीनः रुचिरः पुराणं
भजामि नाकं स्वकुलाभिवृद्धैः ॥ ८ ॥

वायुम्—धूम्रावयं गन्धवहं सुरम्यं
मृगाधिरूढस्त्रिदशैकवन्द्यम् ।
सुपूजकानन्दकरं पुराणं
भजामि वायुं स्वकुलाभिवृद्ध्यै ॥ ९ ॥

पूषणम्—एह्येहि पूषन् सुविचारदक्ष
हयाधिरूढोऽखिल-धर्ममूर्ते ।
पीठेऽत्र देवेश गृहाण पूजां
शिवाय नः पाहि भवन्नमस्ते ॥१०॥

वितथम्—समाह्वयन्तं वितथं विशालं
सुपूजकानन्दकरं वरेण्यम् ।
त्रिशूलहस्तं मकराधिरूढं
भजामि देवं कमलायताक्षम् ॥११॥

गृहक्षतम्—एह्येहि लोकेश्वर दिव्यमूर्ते
गृहक्षतत्वं कनकाद्रिरूपम् ।



पीठेऽत्र देवेश गृहाण पूजां
रक्षाध्वर त्वं भगवन्नमस्ते ॥१२॥

यमम्—एह्येहि दण्डायुध धर्मराज
कालं जनाभास-विशालनेत्र ।
विशाल-वक्षस्थल-रौद्ररूप
गृहाण पूजां भगवन्नमस्ते ॥१३॥

गन्धर्वम्—एह्येहि गन्धर्व सुरप्रियेश
रक्तोत्पलाभास सुधात्ममूर्ते ।
पीठेऽत्र देवेश गृहाण पूजां
ममाऽध्वरं पाहि भवन्नमस्ते ॥१४॥

भृङ्गराजम्—समाह्वयन्तं शिखिपृष्ठसंस्थं
श्रीभृङ्गराजं जगतः शरण्यम् ।
खट्वाङ्गहस्तं वरदं जनेशं
भजामि देवं स्वकुलाभिवृद्धैः ॥१५॥

मृगम्—एह्येहि गोरोचन दिव्यरूप
मृगं प्रकृष्टार्तिहरासुरारे ।
पीठेऽत्र देवेश गृहाण पूजां
ममाऽध्वरं पाहि भवन्नमस्ते ॥१६॥

पितॄन्—समाह्वयन् दिव्यपितॄन् कुलेशान्
रक्तोत्पलाभानिह रक्तनेत्रान् ।

सुरक्तमाल्याम्बरभूषितांश्च
नमामि पीठे कुलवृद्धिहेतोः ॥१७॥

दौवारिकम्—एह्येहि दौवारिक दण्डपाणे
विशालपङ्करुह-लोलनेत्र ।
पीठेत्र देवेश गृहाण पूजां
शिवाय नः पाहि भवन्नमस्ते ॥१८॥

सुग्रीवम्—एह्येहि सुग्रीव सुरेशपूज्य
दशाश्ववाह-त्रिगुणात्ममूर्ते ।
पीठेऽत्र देवेश गृहाण पूजां
मनोरमां त्वां भगवन्नमस्ते ॥१९॥

पुष्पदन्तम्—आवाहयामि देवेशं पुष्पदन्तं महोज्ज्वलम् ।
नानाविभारसम्पन्नं महाघण्टाविराजितम् ॥२०॥

वरुणम्—एह्येहि लोकेश्वर पाशपाणे !
यादोगणैर्वन्दित-पादपद्मम् ।
पीठेऽत्र देवेश गृहाण पूजां
पाहि त्वमस्मान् भगवन्नमस्ते ॥२१॥

असुरम्—आवाहयामि दैत्येन्द्रमसुरं सुरमर्दनम् ।
उग्ररूपं महावीर्यं खड्गबाणधनुर्धरम् ॥२२॥

शेषम्—एह्येहि नागेन्द्र धराधरेश
सर्वामरैर्वन्दित-पादपद्म ।



नानाफणा-मण्डल-राजमान
गृहाण पूजां भगवन्नमस्ते ॥२३॥

भीमम्—आवाहयाम्यहं भीमं पापघ्नं भयप्रदम् ।
अधोमुखं क्षमाहीनं दण्डमुद्गरधारिणम् ॥२४॥

रोगम्—आवाहयाम्यहं रोगमनेकविधलक्षणम् ।
नानाऽलङ्कार-संयुक्तं रक्ताक्षविश्वलोचनम् ॥२५॥

अहिम्—समाह्वयन्तं फणिराजमग्र्यं नानाफणामण्डलराजमानम् ।
भक्तैकगम्यं जनताशरण्यं भजाम्यहं नः स्वकुलाभिवृद्धयै ॥२६॥

मुख्यं—आवाहयाम्यहं देव मुख्य-जीमूत-सन्निभम् ।
भद्रासनसमारूढं देव-गन्धर्व-सेवितम् ॥२७॥

भल्लाटम्—आवाहयाम्यहं देवं भल्लाटं मकरध्वज ! ।
खड्गहस्तं सुखासीनं नीलोत्पलसमप्रभम् ॥२८॥

सोमम्—एह्येहि ताराधिपते सुरेश श्वेतोत्पलाभास सुधाधरेश ।
पीठेऽत्र देवेश गृहाण पूजां पाहि त्वमस्मान्भगवन्नमस्ते ॥२९॥

सर्पम्—आवाहयाम्यहं देवमुरगं वक्रगामिनम् ।
धराधारं महाकायं नानारत्नविभूषितम् ॥३०॥

अदितिम्—आवाहयाम्यहं देवि ! मदितं देवमातरम् ।
सर्वकामप्रदां शुद्धां सर्वविघ्नविनाशिनीम् ॥३१॥

दितिम्—आवाहयाम्यहं देवीं दितिर्दैत्यस्य मातरम् ।
सर्वाङ्गसुन्दरीं रम्यां महामोहकरीं शुभाम् ॥३२॥

अपः—समाहूयाः श्वेतसुपावनेशीरापस्वरूपाः प्रबलप्रपन्नाः ।
सुपाशहस्तां वरदा अपात्रे यजामि देवीं कुलवृद्धिहेतोः ॥३३॥

सावित्र्यम्—समाहूयं दिव्यमुदारकीर्ति कलाकलाभिन्तु महोग्ररूपम् ।
सावित्र्यमग्र्यं सुविशालमूर्ति यजामि देवं स्वकुलाभिवृद्धयै ॥३४॥

जयम्—आवाहयाम्यहं देवं जयं जयकरं परम् ।
हयारूढं महाबाहुं नानालङ्कारशोभितम् ॥३५॥

रुद्रम्—एह्येहि सर्वज्ञ पिनाकपाणे सुरासुरैर्वन्दितपादपद्म ।
पीठेऽत्र देवेश गृहाण पूजां रक्षाध्वरं नो भगवन्नमस्ते ॥३६॥

अर्यमणम्—आवाहयाम्यर्यमणमहं देवं सुरेश्वरम् ।
नीलाम्बुजसमाभासं तेजोराशिं जगत्पतिम् ॥३७॥

सवित्रम्—एह्येहि पीठे सवितर्दिनेश सप्ताश्वसंयुक्तरथाधिरूढ ।
रक्तोत्पलाभासविलासनेत्र गृहाण पूजां भगवन्नमस्ते ॥३८॥

विवस्वन्तम्—रक्ताम्बरं पद्महस्तं विवस्वन्तं प्रभाकरम् ।
सर्वपापहरं देव पीठेऽत्रावाहयाम्यहम् ॥३९॥

विबुधाधिपं—आवाहयाम्यहं देवं विबुधाधिपतिं प्रभुम् ।
चतुर्दन्तं गजारूढं हिमाद्रिशिखरोदयम् ॥४०॥

मित्रम्—एह्येहि रक्ताम्बरधारिमित्रं सप्ताश्वहस्तं त्रिदशैकनाथम् ।
श्वेतोत्पलाभास-विशालनेत्र गृहाण पूजां भगवन्नमस्ते ॥४१॥

राजयक्ष्माणम्—आवाहयाम्यहं राजयक्ष्माणं रोगनन्दनम् ।
त्रिशिरस्कं महाघोरं नागयज्ञोपवीतिनम् ॥४२॥



पृथ्वीधरं—आवाहयाम्यहं देवं पृथ्वीधरमतीन्द्रियम् ।
शङ्ख-चक्र-गदापद्मैरलंकृत-चतुर्भुजम् ॥ ४३ ॥

आणवजम्—आवाहयाम्यहं देवं मास्वन्तं महाबलम् ।
मयूरवाहनं रौद्रं नानाभूषणभूषितम् ॥ ४४ ॥

ब्रह्माणम्—एह्येहि विप्रेन्द्र पितामहेश !
हंसाधिरूढास्त्रिदशैकवन्द्यम् ।
श्वेतोत्पलाभास कुशाब्जहस्त !
गृहाण पूजां भगवन्नमस्ते ॥ ४५ ॥

तथा च—चरक्यै नमः । विदार्यै नमः । पूतनायै नमः । पापराक्षस्यै नमः । स्कन्दाय नमः । अर्यायै नमः । जृम्भकाय नमः । पिलिपिञ्जाय नमः । इन्द्राय नमः । अग्नये नमः । यमाय नमः । निऋतये नमः । वरुणाय नमः । वायवे नमः । कुबेराय नमः । शङ्कराय नमः । ईशानाय नमः । ब्रह्मणे नमः । अनन्ताय नमः ।

ऊपर लिखे देवताओं का पंचोपचार या षोडशोपचार से पूजा करे ।

*

## प्रधानदेवपूजा ( वास्तुदेवपूजा )

आचार्य को चाहिए कि चौंसठ वास्तुपद वेदी के मध्य में ताम्रकलश स्थापित करे । कलशस्थापन विधि पहले लिखी जा चुकी है । उसके अनुसार ही कार्य करे । पूर्णपात्र के ऊपर रोली से अष्टदल कमल बनावे ।

उसपर वास्तुदेव की मूर्ति स्थापित करे। जिस दिशामें वास्तुदेवका सिर हो उधर ही सिर रखकर पीठके बल ( चित, सोये हुए ) वास्तुदेव पुरुष का पूजन करे। किस महीने में किधर सिर रहता है, उसका नीचे संकेत किया जा रहा है। वास्तुमूर्ति सोना, चांदी या तांबे की होनी चाहिए।

शेषशिरोज्ञानम्—

भाद्रत्रये शिरः प्राच्यां याम्यां मार्गत्रये शिरः।
फाल्गुनत्रितये पश्चाच्छिरो ज्येष्ठत्रये त्तरे ॥

भादों, आश्विन, कातिक महीनों में वास्तु पुरुष का सिर पूरब दिशा में रहता है। अगहन, पूस, माघ में दक्षिण दिशा में। और फाल्गुन, चैत, वैशाख में पश्चिम दिशा में, ज्येठ, आषाढ़, श्रावण मे उत्तर दिशा में रहता है। वास्तु पुरुष का स्वरूप सर्पाकार है। वास्तुदेव को कलश पर ही रख कर प्राणप्रतिष्ठा करे।

## प्राणप्रतिष्ठा

यज्ञकर्ता हाथ में जल लेकर विनियोग करे।

ॐ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मा-विष्णु-महेश्वरा ऋषयः, ऋग्यजुःसामानि च्छन्दांसि क्रियामयवपुः, प्राणाख्या देवता, आं वीजं,ह्रीं शक्तिः, क्रौं कीलकं, वास्तुदेवप्राणप्रतिष्ठापने विनियोगः।

ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहं वास्तुदेवस्य प्राणा इह प्राणाः, ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः वास्तुदेवस्य जीव इह स्थिताः, ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं वास्तुदेवस्य सर्वेन्द्रियाणि वाङ्-मन-स्त्वक्चक्षुः-श्रोत्र-घ्राण-जिह्वा-पाणि-पाद-पायूपस्थानि इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा।



यहाँ केवल वास्तुदेव का आवाहन लिखा जा रहा है। आसन से नीराजन तक गणेशपूजा के मन्त्रों द्वारा ही करे। यहाँ आवाहन तथा प्रार्थना इस प्रकार है।

आवाहनम्—आवाहयामि देवेशं वास्तुदेवं महाबलम्।
देवदेवं गणाध्यक्षं पातालतलवासिनम् ॥ १ ॥
एह्येहि भगवन् वास्तो! गृहेऽस्मिन् सर्वसिद्धये।

प्रार्थना—ॐ नमो भगवते वास्तुपुरुषाय महाबलाय प्रभाकराय सर्वदेवाधिवासाश्रितशरीराय ब्रह्मपुत्राय सकलब्रह्माण्ड-धारिणे भूभारार्पितमस्तकाय पुरपत्तनप्रासादगृहवापीसरःकूपादि-सन्निवेश-सान्निध्यकराय सर्वसिद्धिप्रदाय प्रसन्नवदनाय विश्वम्भराय परमपुरुषाय शक्तिवरदाय वास्तोष्पतये नमस्ते नमस्ते।

## कुण्डपूजनम्

यज्ञकर्ता को चाहिए कि अग्निकुण्ड से पश्चिम दिशा में बैठकर हाथ में पुष्प, अक्षत, पुंगीफल, द्रव्य, कुश लेकर संकल्प करे। आचार्य नीचे लिखे संकल्प वाक्य बोले—

ॐ अद्येत्यादि तिथौ अस्मिन् कर्मणि उक्तद्रव्येण ब्राह्मण-द्वारा होमं कर्तुं कुण्डे अग्निस्थापनं तथा पूजनं च करिष्ये ।

यज्ञकर्ता प्रथम अग्निकुण्ड में निम्नांकित मन्त्रद्वारा पूजन करे ।

ॐ भूम्यै नमः, भूमिम् आवाहयामि । कूर्माय नमः, कूर्मम् आवाहयामि । अनन्ताय नमः, अनन्तम् आवाहयामि । भूम्याद्यावाहितदेवता सुप्रतिष्ठिता वरदा भवत ।

हाथ में पुष्प लेकर कुण्ड का स्पर्श करते हुए यह बोले—

आवाहयामि तत्कुण्डं विश्वकर्म विनिर्मितम् ।
शरीरं यच्च ते दिव्यमग्न्यधिष्ठानमद्भुतम् ॥ १ ॥
येन कुण्डे स्थिता देवा कुण्डाङ्गे याश्च देवताः ।
ऋद्धिं यच्छन्तु ते सर्वे यज्ञसिद्धिं मुदान्विताः ॥ २ ॥
हे कुण्ड ! तव निर्माणं रचितं विश्वकर्मणा ।
अस्माकं वाञ्छिता सिद्धिं यज्ञसिद्धिं ददातु मे ॥ ३ ॥

*

## कुशकण्डिका

तुश, केश, शर्करा, ( रेत ) भस्मादि निषिद्ध वस्तु से रहित चारों कोण से हस्तप्रमाण वेदी बनाना चाहिये । सवत्सा गौ के गोबर से लीपकर ठीक करे । वेदीपूजा तो पूर्व ही लिखी गयी है । उक्त मन्त्रों द्वारा ही पूजा करे । पुनः खड्ग या सुरवे से दक्षिण से उत्तर तरफ तीन बार लकीर खींचे और प्रत्येक रेखा से अनामिका और अँगूठा से मृत्तिका ( मिट्टी ) को निकालकर शुद्ध जल वेदीपर छिड़के । आचार्य को चाहिए कि अग्निवेदी के उत्तर तरफ दो पात्र रखे, एक प्रोक्षणी पात्र, दूसरा प्रणीता पात्र, कुशा के ऊपर रखे । उसमें जल तथा कुशा रखे । वेदी के दक्षिण भाग में अग्निकोण के तरफ ब्रह्मा का आसन रखे । २५६ मुट्ठी अरवा चावल रखे । कुशा के मूल में ग्रन्थी देकर उक्त पात्र में रखे । पूर्व जो ब्रह्मा का वरण किया गया है, वहाँ आसन देकर बैठावे । यज्ञ कल्याणहेतु ब्रह्मा मौन होकर वहाँ बैठे और गायत्री मन्त्र जपता रहे । हवन होने के बाद कलशे का उक्त चावल ब्रह्माको दक्षिणा में देवे ।



यज्ञकर्ता पुनः वेदी के पूरब में उत्तर की ओर अग्रभाग करके कुशा रखे । फिर वेदी के दक्षिण में पूरब की ओर अग्र भाग करके कुशा रखे । पुनः वेदी के दक्षिण में उत्तर की ओर अग्रभाग करके कुशा रखे । पुनः वेदी के उत्तर में पूरब की ओर अग्रभाग करके कुशा रखे । तब काँसे के पात्र में अग्नि रखकर मँगावे । पूरब मुख हो अग्नि स्थापन करे । काँसे के पात्र में, जो अग्नि मँगाया गया है, उस पर अक्षत छींटे तथा कुछ द्रव्य रख दे । यह द्रव्य घर की बालिकाओं को दिया जाता है ।

नीचे लिखे मन्त्र द्वारा अग्निस्थापन, पूजन करे—

मन्त्र—ॐ मुखं यः सर्वदेवानां हव्यभुक् कव्यभुक् तथा ।
पितॄणां च नमस्तुभ्यं विष्णवे पावकात्मने ॥ १ ॥
रक्तमाल्याम्बरधरं रक्तपद्मासनस्थितम् ।
रौद्रवागीश्वरीरूपं वह्निमावाहयाम्यहम् ॥ २ ॥
ॐ पावकाग्नये नमः ।

इस मन्त्र द्वारा पंचोपचार से पूजा करे, तथा हाथ में पुष्प लेकर प्रार्थना करे ।

प्रार्थना—अग्ने शाण्डिल्यगोत्र मेषध्वज मम सम्मुखो भव । प्रसन्नो भव । वरदो भव । कल्याणमस्तु ।

हविष्यान्न अथवा शाकल्य से तर्जनी और कनिष्ठा को अलग रखते हुए सीधे हाथ आहुति देवे। नीचे लिखे मन्त्र द्वारा यज्ञकर्ता पहले घी से हवन करे।

ॐ प्रजापतये स्वाहा। इदं प्रजापतये न मम। ॐ भूः स्वाहा। इदमग्नये न मम। ॐ भुवः स्वाहा। इदं वायवे न मम। वं स्वाहा इदं सुपर्णाय न मम। ॐ अग्नये स्वाहा इदमग्नये न मम।

ग्रह के अनुसार समिधा (लकड़ियाँ) यज्ञकर्ता घी में डुबोकर आचार्य के मन्त्र द्वारा स्वाहा कहने पर अग्नि में दिया करे।

मदार की लकड़ी से सूर्य को—ॐ सूर्याय नमः स्वाहा। पलास से चन्द्रमा को—ॐ चन्द्राय नमः स्वाहा। खैर से मंगल को—ॐ मङ्गलाय नमः स्वाहा। चिचिड़ी से बुध को—ॐ बुधाय नमः स्वाहा। पीपर से गुरु को—ॐ बृहस्पतये नमः स्वाहा। गूलर से शुक्र को—ॐ शुक्राय नमः स्वाहा। शमी से शनि को—ॐ शनैश्चराय नमः स्वाहा। दूर्वासे राहु को—ॐ राहवे नमः स्वाहा। कुशा से केतु को—ॐ केतवे नमः स्वाहा।

फिर शाकला से हवन करे।

ॐ गणपतये नमः स्वाहा, ॐ दुर्गायै नमः स्वाहा, ॐ ब्रह्मणे०, सोमाय०, ईशानाय०, इन्द्राय०, अग्नये०, यमाय०, निर्ऋतये०, वरुणाय०, वायवे०, ध्रुवाय०, अनिलाय०, नलाय०, प्रभाशाय०, त्र्यम्बकाय०, सुरेश्वराय०, विष्णवे०, सत्याय०।



## वास्तुमण्डलदेवताहोमः

पर्जन्याय स्वाहा, जयन्ताय स्वाहा, इन्द्राय स्वाहा, सूर्याय स्वाहा, सत्याय स्वाहा, वृषाय स्वाहा, आकाशाय०, वायवे०, पूष्णे०, वितथाय०, गृहक्षताय०, यमाय०, गन्धर्वाय०, भृङ्गराजाय०, मृगाय०, पितृभ्यो०, दौवारिकाय०, सुग्रीवाय०, पुष्पदन्ताय०, वरुणाय०, असुराय०, शेषाय०, पापाय०, रोगाय०, सर्पाय०, मुख्याय०, भल्लाटाय०, सोमाय०, उरगाय०, अदितये०, दितये०, अद्भ्यो०, आपवत्साय०, अर्यम्णे०, सवित्राय०, विवस्वते०, सवित्रे०, विबुधाधिपाय०, जयन्ताय०, मित्राय०, राजयक्ष्मणे०, रुद्राय०, पृथ्वीधराय०, ब्रह्मणे०, चरक्यै०, विदार्यै०, पूतनायै०, पापराक्षस्यै०, स्कन्धायै०, अर्यम्णे०, जृम्भकाय०, पिलिपिच्छाय०, इन्द्राय०, अग्नये०, यमाय०, निर्ऋतये०, वरुणाय०, वायवे०, कुबेराय०, शङ्कराय०, ईशानाय०, ब्रह्मणे०, अनन्ताय० ॥ ६४ ॥ इति वास्तुमण्डलदेवताहोमः।

## वास्तुदेवताहोमः

हविष्यान्न (हविष) मधु, घी, काला तिल मिलाकर नीचे लिखे मन्त्र द्वारा हवन करे। कम से कम १०८ एक सौ आठ बार।

मन्त्र—नमस्ते वास्तुपुरुष भूशय्याभिरतः प्रभो!।
मद्गृहे धन-धान्यादि संवृद्धिं कुरु सर्वदा॥

वास्तोष्पतये नमः स्वाहा ।

नीचे लिखे मन्त्र द्वारा चार बेल के फल से हवन करे। बेल सम्पूर्ण होना चाहिए। प्रत्येक बार मन्त्र बोलकर अग्नि में देवे।

ॐ ध्रुवाय नमः स्वाहा। इति वास्तुदेवताहोमः।

पुनः शाकल से हवन करे।

कश्यपाय स्वाहा, अत्रये स्वाहा, भरद्वाजाय स्वाहा, विश्वामित्राय स्वाहा, गौतमाय स्वाहा, जमदग्नये स्वाहा, वसिष्ठाय स्वाहा, अनन्ताय स्वाहा, वासुकये स्वाहा, शेषाय स्वाहा, तक्षकाय स्वाहा, कर्कोटाय स्वाहा, पद्माय स्वाहा, महापद्माय स्वाहा, शङ्खपालाय स्वाहा, कम्बलाय स्वाहा, पिशाचेभ्यः स्वाहा, गुह्यकेभ्यः स्वाहा, सिद्धेभ्यः स्वाहा, भूतेभ्यः स्वाहा, सर्पेभ्यः स्वाहा, विश्वावसवे स्वाहा, गन्धर्वाय स्वाहा, हयायै स्वाहा, हूहवे स्वाहा, घृतायै स्वाहा, मेनकायै स्वाहा, रम्भायै स्वाहा, उर्वश्यै स्वाहा, तिलोत्तमाय स्वाहा, सुकेश्यै स्वाहा, मञ्जुघोषायै स्वाहा, रुद्रेभ्यः स्वाहा, स्कन्धायै स्वाहा, नन्दीश्वराय स्वाहा, शूलाय स्वाहा, महादेवाय स्वाहा, रुद्राय स्वाहा, श्रियै स्वाहा, विष्णवे स्वाहा, मरुद्गणाय स्वाहा, शमीराय स्वाहा, मरुताय स्वाहा, जगत्प्राणाय स्वाहा, समीराय स्वाहा, मेदिन्यै स्वाहा, गङ्गायै स्वाहा, सरस्वत्यै स्वाहा, सरय्वै स्वाहा, कौशिक्यै स्वाहा, वेदवत्यै स्वाहा, गोदावर्यै स्वाहा, ताप्यै स्वाहा, रेवायै स्वाहा, दयादायै स्वाहा, कृष्णायै स्वाहा, भीमरथ्यै स्वाहा, तुङ्गभद्रायै स्वाहा,



क्षुद्रनदीभ्यः०, लवणसमुद्राय०, इक्षुसमुद्राय०, सुरासमुद्राय०, सर्पिःसमुद्राय०, दधिसमुद्राय०, क्षीरसमुद्राय०, जीवनसमुद्राय०, आदित्याय०, सोमाय०, भौमाय०, बुधाय०, बृहस्पतये०, शुक्राय०, शनैश्चराय०, राहवे०, केतवे०, ब्राह्मयै०, माहेश्वर्यै०, कौमार्यै०, वैष्णव्यै०, वाराह्यै०, इन्द्रायै०, चामुण्डायै०, वज्रायै०, शक्त्यै०, दण्डाय स्वाहा, खड्गाय स्वाहा, पाशाय स्वाहा, अङ्कुशाय स्वाहा, गदायै स्वाहा, त्रिशूलाय स्वाहा, पद्माय स्वाहा, चक्राय स्वाहा, श्रीमहाविष्णवे स्वाहा ।

## बलिदानम्

पहले दश दिक्पालों को निम्नाङ्कित बलि दे। यह बलि यदि वेदी बनी हो तो प्रत्येक दिक्पालों को पृथक्-पृथक् दे। कितनी जगह अग्निकुण्ड के दशों दिशाओं में बलि दिया जाता है। एक दोने में या एक पत्ते पर दधि, उरद, प्रज्वलित दीप रखकर नीचे लिखे मन्त्रों द्वारा बलि दे।

पूर्व में-इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधि-माष-भक्तबलिं समर्पयामि। भो इन्द्र! दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुम्बस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्त्ता पुष्टिकर्त्ता वरदो भव ॥ १ ॥

अग्नि कोण में—अग्नये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि। भो अग्ने!

दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुम्बस्य आयुःकर्त्ता क्षेमकर्त्ता शान्तिकर्त्ता तुष्टिकर्त्ता पुष्टिकर्त्ता वरदो भव ॥ २ ॥

दक्षिण में—यमाय साङ्गाय सपरिवाराय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि । भो यम ! दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुम्बस्य आयुःकर्त्ता क्षेककर्त्ता शान्तिकर्त्ता तुष्टिकर्त्ता पुष्टिकर्त्ता वरदो भव ॥ ३ ॥

नैर्ऋत्य कोण में—निर्ऋतये साङ्गाय सपरिवाराय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि । भो निर्ऋते ! दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुम्बस्य आयुःकर्त्ता क्षेमकर्त्ता शान्तिकर्त्ता तुष्टिकर्त्ता पुष्टिकर्त्ता वरदो भव ॥ ४ ॥

पश्चिम में—वरुणाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधि-माष-भक्तबलिं समर्पयामि । भो वरुण ! दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुम्बस्य आयुःकर्त्ता क्षेमकर्त्ता शान्तिकर्त्ता तुष्टिकर्त्ता पुष्टिकर्त्ता वरदो भव ॥५॥

वायव्य कोण में—वायवे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि । भो वायो ! दिशं रक्ष बलिं भक्ष अस्य यजमानस्य आयुःकर्त्ता क्षेमकर्त्ता शान्तिकर्त्ता तुष्टिकर्त्ता पुष्टिकर्त्ता वरदो भव ॥ ६ ॥

उत्तर में—कुबेराय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि । भो कुबेर ! दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुम्बस्य आयुःकर्त्ता क्षेमकर्त्ता शान्तिकर्त्ता तुष्टिकर्त्ता पुष्टिकर्त्ता वरदो भव ॥ ७ ॥



ईशान कोण में—ईशानाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि । भो ईशान ! दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुम्बस्य आयुःकर्त्ता क्षेमकर्त्ता शान्तिकर्त्ता तुष्टिकर्त्ता पुष्टिकर्त्ता वरदो भव ॥ ८ ॥

ईशान—पूर्व के मध्य में—ब्रह्मणे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि । भो ब्रह्मन् ! दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुम्बस्य आयुःकर्त्ता क्षेमकर्त्ता शान्तिकर्त्ता तुष्टिकर्त्ता पुष्टिकर्त्ता वरदो भव ॥ ९ ॥

निर्ऋति-पश्चिम के मध्य में—अनन्ताय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि । भो अनन्त ! दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुम्बस्य आयुःकर्त्ता क्षेमकर्त्ता तुष्टिकर्त्ता पुष्टिकर्त्ता वरदो भव ॥ १० ॥

इति दशदिक्पालबलिदानम् ।

## नवग्रहबलिदानम्

ग्रहेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः एतं सदीपं दधिमाषभक्तबलिं समर्पयामि । भो ग्रहाः दिशं रक्षध्वं बलिं भक्षध्वं अस्य यजमानस्य सकुटुम्बस्य आयुःकर्त्तारः शान्तिकर्त्तारः तुष्टिकर्त्तारः पुष्टिकर्त्तारः वरदा भवन्त ।

इति ग्रहादिबलिदानम् ।

दुर्गाबलिम्—दुर्गायै साङ्गायै सपरिवारायै सायुधायै सशक्तिकायै एतं सदीपं दधिमाषक्तबलिं समर्पयामि। भो दुर्गे! दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुम्बस्य आयुः-कर्त्री क्षेमकर्त्री शान्तिकर्त्री तुष्टिकर्त्री पुष्टिकर्त्री वरदा भव।

वास्तुदेवतामण्डलबलिम्—इन देवताओं को पायस ( हविष ) का बलि देवे। वास्तुमण्डलदेवेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः पायसबलिं समर्पयामि। भो देवाः गृहं रक्षध्वं बलिं भक्षध्वं अस्य यजमानस्य सकुटुम्बस्य आयुःकर्त्तारः शान्तिकर्त्तारः तुष्टिकर्त्तारः पुष्टिकर्त्तारः वरदा भवत।

## प्रधानबलिम्

एक दोने में पायस, घी मधु, काला तिल, पंचमेवादि देकर वास्तु-देव को देवे।

वास्तुमूर्तीभ्यां साङ्गाभ्यां सपरिवाराभ्यां सायुधाभ्यां सशक्तिकाभ्यां इदं पायसबलिं समर्पयामि। भो वास्तुमूर्ते इदं बलिं गृहाण, त्वं मम गृहे सकलकुटुम्बस्याभ्युदयं कुरुत। आयुः-कर्त्तारौ शान्तिकर्तारौ भवेताम्। अनेन बलिदानेन वास्तुध्रुवमूर्त्यौ प्रीयतां न मम।

## क्षेत्रपालबलिम्

मिट्टी के पात्र में दधि, उरद, सिन्दूर, कज्जल, दीप, द्रव्य के साथ बलि देवे—भो क्षेत्रपाल! बलिं समर्पयामि,। भो क्षेत्रपाल दिशं रक्ष



बलिं भक्ष अस्य यजमानस्य सकुटुम्बस्य सपरिवारस्य आयुःकर्त्ता क्षेमकर्त्ता तुष्टिकर्त्ता पुष्टिकर्त्ता वरदो भव।

## पूर्णपात्रदानम्

अद्येत्यादि कृतस्य वास्तुशान्तिकर्मणः साङ्गतासिद्ध्यर्थमिदं पूर्णपात्रं प्रजापतिदैवतं ब्रह्मणे दातुमहमृत्सृजे।

कुशा में जो काठ बाँधा गया था वह खोल दे।

## आचार्यगोदानम्

सङ्कल्पः—कृतस्य वास्तुशान्तिकर्मणः साङ्गतासिध्यर्थमिदं गोनिष्क्रयभूतं द्रव्यं रजतं चन्द्रदैवतममुकगोत्राय आचार्याय तुभ्यमहं सम्प्रददे।

## पूर्णाहुतिसङ्कल्पः

ताम्बूल, पूगीफल युक्त नारियल को लाल वस्त्र में लपेट घृत डुबोकर संकल्प द्वारा अग्नि में देवे।

संकल्पः—अद्येत्यादि अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे मम मनोऽभिलषित-धर्मार्थकामादि-यथेप्सितायुरा-रोग्यैश्वर्य-पुत्रपशुसुहृत्सम्बन्धि-बान्धवादिप्राप्तये ब्राह्मण-द्वारा मत्कारिते वास्तुशान्ति-सर्वारिष्टपरिहारार्थं च स्वैर्मन्त्रै-र्यवतिलतण्डुलाज्याहुतिभिः परिपूर्णतासिद्धये पूर्णाहुतिहोममहं करिष्ये।

नीचे लिखे मन्त्र द्वारा अग्नि में उक्त नारियल को छोड़े।

पूर्वा दर्वि परापत सुपूर्णा पुनरापत।
वस्नेव विक्रीणावहा इषमूर्जंठ. तक्रतो स्वाहा॥

नीचे लिखे मन्त्र द्वारा नारियल के ऊपर घृत देवे।

ॐ देवागातुं विदो गातुं वित्वा गातुमित मनसस्पत इदं देवाय स्वाहा। ॐ स्वाहा। ॐ व्वातेधाः स्वाहा।

इति बर्हिहोमः।

आरती—साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया।
दीपं गृहाण देवेश त्रैलोक्यतिमिरापह॥

प्रार्थना—आवाहनं न जानामि न जानामि विसर्जनम्।
पूजां चैव न जानामि क्षम्यतां परमेश्वर॥
अन्यथा शरणं नास्ति त्वमेव शरणं मम।
तस्मात् कारुण्यभावेन रक्ष त्वं परमेश्वर॥

दिग्रक्षा-विधान में जो कच्चासूत (धागा) रखा गया था वह लेकर आचार्य यज्ञकर्ता के दाहिने हाथ में बाँधे और स्त्री के बायें हाथ में बाँध दे।

मन्त्रः—येन बद्धो बलीराजा दानवेन्द्रो महाबलः।
तेन त्वां प्रतिबध्नामि रक्षे मा चल मा चल॥

## अभिषेकः

अभिषेक के समय यज्ञकर्त्ता की स्त्री वाम भाग में रहे तथा पुत्र-पौत्रादि भी निकट रहें। आचार्य रुद्रकलश के जल से आम्र पल्लव द्वारा निम्नलिखित मन्त्रों से अभिषेक करे।



गणाधिपो भानु शशी धरासुतो बुधो गुरुर्भार्गवसूर्यनन्दनः।
राहुश्च केतुश्च परं नवग्रहाः कुर्वन्तु वः पूर्णमनोरथं सदा॥१॥
उपेन्द्र इन्द्रो वरुणो हुताशनो त्रिविक्रमो भानुसखश्चतुर्भुजः।
गन्धर्वयक्षोरगसिद्धिचारणाः कुर्वन्तु वः पूर्णमनोरथ सदा॥२॥
नलो दधीचिः सगरः पुरूरवा शाकुन्तलेयो भरतो धनञ्जयः।
रामत्रयं वैन्यबली युधिष्ठिरः कुर्वन्तु वः पूर्णमनोरथं सदा॥३॥
मनुर्मरीचिर्भृगुदक्षनारदाः पराशरो व्यासवसिष्ठभार्गवाः।
वाल्मीकिकुम्भोद्भवगर्गगौतमाः कुर्वन्तु वः पूर्णमनोरथं सदा॥४॥
रम्भा शची सत्यवती च देवकी गौरी च लक्ष्मीश्च दितिश्च रुक्मिणी।
कूर्मो गजेन्द्रः स-चराचराधराः कुर्वन्तु वः पूर्णमनोरथं सदा॥५॥
गङ्गा च क्षिप्रा यमुना सरस्वती गोदावरी वेत्रवती च नर्मदा।
सा चन्द्रभागा वरुणा त्वसी नदी कुर्वन्तु वः पूर्णमनोरथं सदा॥६॥
तुङ्गप्रभासो गुरुचक्रपुष्करं गया विमुक्तो बदरी वटेश्वरः।
केदार-पम्पासरसश्च नैमिषः कुर्वन्तु वः पूर्णमनोरथ सदा॥७॥
शङ्खश्च दूर्वासितपत्रचामरं मणिः प्रदीपो वररत्नकाञ्चनम्।
सम्पूर्णकुम्भः सुहुतो हुताशनः कुर्वन्तु वः पूर्णमनोरथ सदा॥८॥
प्रयाणकाले यदि वा सुमङ्गले प्रभातकाले च नृपाभिषेचने।
धर्मार्थकामाय जयाय भाषितं व्यासेन कुर्यात्तु मनोरथ हि तत्॥९॥

आचार्य यज्ञकर्ता के मस्तक में तिलक लगाये।

मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः।
शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव॥

## मण्डलदेवताप्रार्थना विसर्जनं च

गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर ।
यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥
यान्तु देवगणाः सर्वे पूजामादाय मामकीम् ।
इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च ॥

प्रार्थना--रूप देहि जयं देहि यशो देहि द्विषो जहि ।
पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे ॥
आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजां चैव न जानामि क्षम्यतां परमेश्वरि ! ॥

इति वास्तुशान्तिपद्धतिः समाप्ता ।

## कुलदेवतास्थापनविधिः

यज्ञकर्ता किसी आचार्य या ज्योतिषी द्वारा पूछकर कुलदेवता स्थापन का स्वरूप निर्णय करावे तथा चन्द्र दक्षिणायन सूर्य उत्तरायण हो, गुरु शुक्र उदय हो, शुक्ल पक्ष तथा शुद्ध समय हो, प्रतिपदा, चतुर्थी, पंचमी, अष्टमी, नवमी, चतुर्दशी, अमावस यह वर्जित तिथि हैं, रवि, भौम, शनिवार छोड़कर । अश्विनी, रोहिणी, मृगशिरा, पुनर्वसु, पुष्य, हस्त, चित्रा, स्वाति, अनुराधा, उत्तराषाढ़, श्रवण, धनिष्ठा, शतभिष, उत्तरा भाद्रपद, रेवती तथा वृष, सिंह, मिथुन, कन्या, वृश्चिक, धनु, कुम्भ व मीन में, विवाह समय या शुभ कार्य में स्थापन करे ।

यज्ञकर्ता सायंकाल स्नान कर शुद्ध वस्त्र धारण कर स्त्री सहित पर्व देवता के स्थान पर जाकर आचार्य के आदेशानुसार बैठे । आचार्य को चाहिए कि वास्तुशान्ति-पद्धति के अन्तर्गत गणेश पूजन द्वारा ही पूजा करे, कलशस्थापन के बाद पूर्णपात्र के ऊपर कुलदेवता के निमित्त पूगी-



फल, द्रव्य रखे । अपने सामने कुलदेवता का कलश रखे । और स्त्री के सामने कुलदेवियों का कलश रखे, तथा षोडशोपचार से पूजा करे । पुनः दूसरे दिन स्थापन के समय उक्त कलश को अपने तथा स्त्री दोनों कलशों को लेकर गीत-वाद्यादि के सहित कुलदेव का स्थापन घर में ले जाकर करे । यज्ञकर्ता पवित्री धारण कर आचमन करे । आचार्य स्वस्ति वाचन कर संकल्प करे ।

संकल्पः—ॐ अद्याऽमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकगोत्रस्य सपरिवारस्य मम अमुकशर्मण उपस्थितशरीराविरोधेन सकलसञ्चितदुरितसमूलक्षयपूर्वक-धनजनपूर्णत्वमित्याभ्युदयकल्याणचतुर्वर्गसुखप्राप्तिकामनया अमुकाऽमुककुलदेवतास्थापनमहं करिष्ये ।

आचार्य को चाहिये कि कुल परम्परा के अनुसार देवताओं को स्थापन करे । घी, सिन्दूर आदि से बिन्दु या लम्ब वृत्ताकार चिह्नाङ्कित करे तथा षोडशोपचार से पूजा करे । गणेशपूजन में षोडशोपचार लिखा गया है । उसे देखकर ही करे । जहाँ परमेश्वर लिखा है वहाँ शक्ति देवियों की पूजा में 'परमेश्वरि' कहे । पूजनोपरान्त नीचे लिखी प्रार्थना करे ।

प्रार्थना—मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि ।
यत्पूजितं मया देवि परिपूर्णं तदस्तु मे ॥

यज्ञकर्ता हाथ में कुशा, जल, पूगीफल लेकर संकल्प द्वारा ब्राह्मणों को दक्षिणा दे ।

संकल्पः—ॐ अद्य कृतस्य कुलदेवतास्थापनप्रतिष्ठार्थं यावद्द्रव्यमूलकहिरण्यमग्निदैवत यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे । इति कुलदेवतापनविधिः ।

## हनुमत्पूजनं ध्वजास्थापनं च

यज्ञकर्ता को चाहिये कि वास्तुशान्ति ( गृहप्रवेश ) के दिन ही वायव्य कोण में एक छोटी सी महाबीर जी की प्रतिमा स्थापित करे। कितनी जगह वायव्य कोणस्थित दीवाल में घी, सिन्दूर से मिश्रित हनुमान् जी को चित्रांकित करते हैं। उक्त स्थान पर ही ध्वजारोपण करते हैं। ध्वजा का निश्चय काल यह है—

कुजवारे नवम्यां वा अन्यस्यां शुभदातिथौ।
श्रद्धया चोत्तरे काले ध्वजादानादिनी शुभम् ॥

रामनवमी, वसन्त पंचमी, कार्तिक चतुर्दशी, चैत्र चतुर्दशी, भौम वार तथा अन्य शुभकार्यों में ध्वजा स्थापन करना चाहिये। ध्वजा नीचे लिखे अनुसार काम में लानी चाहिये।

सरलच्छिद्ररहितो निर्वर्णो मूलसंयुतः।
दशहस्ताधिको ग्राह्यो वांसस्तु ध्वजहेतवे ॥

बाँस सड़ा-गला न होना चाहिये। जिसमें छिद्र न हो, मूल सहित हो, दस हाथ से अधिक हो। ध्वजा बाँस का ही होना श्रुतिसम्मत है।

यज्ञकर्ता पूजास्थान में आसन पर बैठे। आचार्य यजमान को चन्दन लगा दे, आम्र पल्लव से मस्तक पर जल छींटे। शान्ति दीप प्रज्वलित कर अक्षत पर स्थापित करे। यह सब मन्त्र वास्तुशान्ति पूजा प्रकरण के अनुसार ही करे। प्रथम यज्ञकर्ता का कर्तव्य है कि हाथ में पुष्प, द्रव्य, अक्षत, पूंगीफल, कुशा लेकर संकल्प करे।

संकल्पः---ॐ अद्येत्यादि अमुकगोत्रस्य सपरिवारस्य मम श्रीअमुकशर्मण उपस्थितशरीराविरोधेन सकलदोषनिवृत्तिपूर्वक-



दीर्घायुष्य-पुष्टिनैरुज्यधनपरिजनसुखसौमनाभीष्टसिद्धिकामनया हनुमत्पूजनं तथा हनुमद्ध्वजास्थापनमहं करिष्ये।

ध्यान—अतुलित-बलधामं हेमशैलाभदेहं
दनुजवनकृशानुं ज्ञानिनामग्रगण्यम्।
सकलगुणनिधानं वानराणामधीशं
रघुपतिप्रियभक्तं वातजातं नमामि ॥

पाद्य, अर्घ्य, आचमन, स्नानादि गणपति पूजन मन्त्र द्वारा ही करे। चन्दन में रक्तचन्दन ही काम में लावे तथा रक्त पुष्प भी होना चाहिये। नैवेद्य में लड्डू रखे। हाथ में पुष्प, अक्षत लेकर प्रार्थना करे।

प्रार्थना–मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम्।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥

## ध्वजास्थापनम्

यज्ञकर्ता ध्वजा स्थापन के लिए स्थान को खोदे ( गड्ढा बनावे ) शुद्ध जल से गड्ढे को पोते। 'ॐ पृथिव्यै नमः' यह कहकर उक्त गड्ढे की पंचोपचार से पूजा करे। भक्तशिरोमणि हनुमन्त लाल जी का ध्वजा रक्त वर्ण का होना चाहिये तथा ध्वजा में हनुमन्त लाल जी का चित्राङ्कित हो। उक्त ध्वजा को स्वच्छ जल से स्नान करावे तथा घी, सिन्दूर से लिप्त कर उक्त गड्ढे में स्थापित करे। ध्वजा-मूल को दृढ़ कर दे। वर्ष पर्यन्त उसके गिरने की आशंका न रहे, यह देख लेना चाहिये। ध्वजा भंग होने या पतन होने से गृहस्वामी का

अनिष्ट होने की सम्भावना रहती है। हाथ में पुष्प, अक्षत लेकर ध्वजस्थित हनुमान् जी की स्तुति करे।

स्तुतिः—उल्लंघ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः।
आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम् ॥ १ ॥

देवासुराणां सर्वेषां मङ्गलोऽयं महाध्वजः।
गृह्यतां सुखहेतोर्मे ध्वजः श्रीपवनात्मज ॥ २ ॥

इति ध्वजारोपणं समाप्तम्।

*

मुद्रक—सत्य शिव प्रेस दारानगर, वाराणसी-१

# अथ गृहवास्तुचक्रम्

पूर्व

ॐ ब्रह्मणे नमः: रक्त ६२

५४ ॐ इन्द्राय नमः (पीत वा रक्त)
५० ॐ स्कंदाय नमः (रक्त वा कृष्ण)

६१ ॐ ईशानाय नमः (श्वेत) ॐ चरक्यै नमः ४६ धूम्र

(रक्त) ५५ ॐ अग्नये नमः ॐ विदार्यै नमः ४७ (रक्त)

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ॐ शिखिने नमः रक्त १ | ॐ पर्जन्यायनमः पीत २ | ॐ जयन्ताय नमः पीत ३ | ॐ कुलिशायुधाय नमः पीत ४ | ॐ सूर्याय नमः रक्त ५ | ॐ सत्याय नमः श्वेत ६ | ॐ भृशाय नमः कृष्ण ७ | ॐ आकाशाय नमः कृष्ण ८ | ॐ वायवे नमः धूम्र ९ |
| ॐ दित्यै नमः पीत ३२ | ॐ अद्भ्या नमः श्वेत ३३ | | | | | | ॐ सवित्रे नमः श्वेत ३४ | ॐ पूष्णे नमः रक्त १० |

| | | | | |
|---|---|---|---|---|
| ॐ अदित्यै नमः पीत ३१ | ॐ आपवत्साय नमः श्वेत ४४ | ॐ अर्यम्णे नमः कृष्ण ३७ | ॐ सवित्रे नमः रक्त ३८ | ॐ वितथाय नमः श्वेत ११ |
| ॐ सर्पेभ्यो नमः कृष्ण ३० | | | | ॐ गृहक्षताय नमः पीत १२ |
| ॐ सोमाय नमः श्वेत २९ | ॐ पृथ्वीधराय नमः रक्त ४३ | वृषवा ॐ ब्रह्मणे स्तु ४५ नमः ५१ पद पीत वा श्वेत | ॐ विवस्वते नमः श्वेत ३९ | ॐ यमाय नमः कृष्ण १३ |
| ॐ भल्लाटाय नमः कृष्ण २८ | | | | ॐ गन्धर्वाय नमः रक्त १४ |
| ॐ मुख्याय नमः रक्त २७ | ॐ राजयक्ष्मणे नमः रक्त ४२ | ॐ मित्राय नमः श्वेत ४१ | ॐ विबुधाधिपाय नमः रक्त ४० | ॐ भृङ्गराजाय नमः कृष्ण १५ |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ॐ अहिर्बुध्न्याय नमः रक्त २६ | ॐ रुद्राय नमः रक्त ३६ | ॐ शोषाय नमः कृष्ण २३ | ॐ असुराय नमः पीत २२ | ॐ वरुणाय नमः श्वेत २१ | ॐ पुष्पदन्ताय नमः रक्त २० | ॐ सुग्रीवाय नमः श्वेत १९ | ॐ जयन्तायनमः श्वेत ३५ | ॐ मृगाय नमः पीत १६ |
| ॐ रोगाय नमः रक्त २५ | ॐ पापाय नमः पीत २४ | | | | | | ॐ दौवारिकाय नमः रक्त १८ | ॐ पितृभ्यो नमः रक्त १७ |

उ०

५३ ॐ पिलिपिञ्जाय नमः (पीत)
६० ॐ सोमाय नमः (श्वेत)

द०

५६ ॐ यमाय नमः [कृष्ण]
५१ ॐ अर्यम्णो नमः [कृष्ण]

धूम्र ५९ ॐ वायवे नमः ॐ पापराक्षस्यै नमः ४९ (कृष्ण)

५७ ॐ निर्ऋतये नमः [नील] ॐ पूतनायै नमः ४८ [पीत वा हरित]

५२ ॐ जम्भकाय नमः (रक्त) ॐ अनन्ताय नमः ६३ (कृष्ण)
५८ ॐ वरुणाय नमः (श्वेत)

प०

प्रकाशक- **मास्टर खेलाड़ीलाल**
कचौड़ीगली, वाराणसी